श्रीनमोनारायणाय ॐ अथ पुरुषो ह वै नारायणोऽकामयत्
प्रजाःसृजेयेति नारायणात्प्राणोजायते मनःसर्वेन्द्रियाणि च खं
वायुर्ज्योतिरापःपृथ्वी विश्वस्य धारिणी नारायणाद्ब्रह्माजायते
नारायणाद्रुद्रोजायते। नारायणादिन्द्रोजायते नारायणात्प्रजा
पतिःप्रजायते नारायणाद्द्वादशादित्या रुद्रावसवः सर्वाणि च
1 छन्दांसि च नारायणादेव समुत्पद्यन्ते नारायणात्प्रवर्त्तन्ते ना 1
रायणे प्रलीयन्ते। अथ पुरुषो ह वै नित्यो नारायणो रुद्रो ना
रायणो ब्रह्मा नारायणः शिवश्च नारायणः शक्रश्च नारा
यणः कालश्च नारायणः ऊर्ध्वं च नारायणो दिशश्च नारायणः आकाश

श्च नारायणोऽन्तर्बहिश्च नारायणो नारायणएवेदं सर्वं यद्भूतं

भवनं गमिष्यति तदिदं परं पुरुषं पुण्डरीकाक्षं विज्ञानघनं
तस्मात्तदित्यवभासमानं चैतावन्मात्रम्। ब्रह्मण्यो देवकी
पुत्रो ब्रह्मण्यो मधुसूदनः ॐ सर्वभूतस्थमेकं वै नारा
यणं पुरुषमकारणं परं ब्रह्म ओं एतदथर्वशिरो यो
ऽधीते सपापोऽपापो भवति सायमधीयानो दिवसकृतं
२ पापं नाशयति प्रातरधीयानो जन्मकृतं पापं नाशयति
मध्यंदिनमादित्याभिमुखोऽधीयानः पंचभ्यः पातके महा
पातकानुपातकोपपातकेभ्यः प्रमुच्यते सर्ववेदपारा
यणपुण्यं भवति श्रीनारायणसायुज्यमवाप्नो

ति ३ य एवं वेद ॐ इति श्रीनारायणोपनिषत् संपूर्ण
शुभमस्तु श्रीरस्तु

पञ्चमाणं निष्कलंको निरंजनो निर्विकल्पो निराकारो निराधारो निरा
ख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चिद् य एवं वेद
स विष्णुरेव भवति ३ ॐ इत्यग्रे व्याहरेन्नम इति पश्चात् नारायणाय
इत्युपरिष्टात् ॐ इत्येकाक्षरं नम इति द्वे अक्षरे नारायणायेति
पंचाक्षराणि। एतद्वै नारायणस्याष्टाक्षरं पदमधीते यो ह वै
B नारायणस्याष्टाक्षरं पदमधीत्यनुप्रब्रुवन्न सर्वमायुरेति
विन्दति प्राजापत्यं रायस्पोषं गौपत्यं ततोऽमृतत्वमश्नुते इति
प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम् अकार उकार मकार इ
ति तानेकधा समभवत्तदेतदोमिति यमुक्त्वा मुच्यते योगी जन्म
संसारबन्धनात् ॐ नमो नारायणायेति मन्त्रोपासको वैकुं